# उच्चोदर्कि

नित्याभिनिहतक्षैप्रपूर्वोदात्तस्य संग्रहः
क्रियते हस्तविन्यासभेदोच्चारणसिद्धये १
यदेकस्मिन्पदे स्वारपूर्वोदात्तो न विद्यते
संहिता लक्षणं तस्मादिदमित्यवगच्छत २
उदात्तप्रचयौ भिन्नौ स्थानवाक्स्थानभेदतः
अस्मिन्तानेव गोष्ठे ते राष्ट्रे लोके क्षये परः ३
असंबुद्धिसुबन्ते निशब्दे वृत्तं यदेतदोः
तदन्ययोस्तदा स्वारोदात्तपूर्वाक्षरं वसोः ४
अस्माल्लोकादन्तरिक्षादन्नाद्यस्य किमातृणम्
अग्ना इहि व्यसौ पात्रममुतोऽस्त्यन्तरात्मनः ५
अभ्यैय्यस्यामधो एव तपसाग्नेर्द्धृता अपः
अस्मानर्वान् स्व उक्थ्यस्याद्यन्तोनाश्शुंभवत्यवः ६
उग्रामध्येंशुरानीय्य सर्वान् रुंशुममुखलु
इदानीमभ्यहं स्वाहात्वोतामासो अहंस्यदि ७
अमुष्यास्यै ध्यपां वज्रो यथानुन्म उदेत्युप
इति ब्रह्माप्सुसेन्द्राय मतूर्त्तोसीत्युखा त्रयः ८
अस्येश्वरो नमासन् स्युर्वर्षौ जो जामजा नहि
अस्माकमक्ष्योरस्मद्वा प्राणोऽश्नात्यूर्जमश्विना ९
ज्योतिरन्नाद्यमन्वाग्नौ त्रै बृहस्पतये जया
ईङ्ग्यानंशपदेष्वेषूदात्तं स्वारात्परोऽक्षरम् १०
स्वारात्परोऽनुदात्तस्य संग्रहो यमुदीरितः
सर्वान् देवान् गुरून्नत्वा लघुवृत्तिः प्रवक्ष्यते ११
उच्चोदर्किदशश्लोक्या बालव्युत्पत्तिसिद्धये
श्रीकेशवार्याचार्याणां पदपंकजमञ्जसा १२
विद्वन्मणीनां यज्जिह्वा कोशवेश्माय ते नमः १३
इति श्री केशवाचार्यविरचितमुच्चोदर्कि संपूर्णं

Reference:
Manuscript #4378g in Venkateshwara University Oriental Research Institute Library, Grantha script on palm leaves, 1 folio.
Manuscript #66413, (19 G 12) in Adyar Library and Research Center, Telugu Script on palm leaves, 1 folio.
K. Parameswara Aithal, *Veda-Lakṣaṇa: Vedic Ancillary Literature*, (Motilal Banarsidass, Delhi: 1993) Article #180, beginning and ending verses of Uccodarki, pp. 153-156.